॥ द्वादशस्तोत्राणि श्रीमध्वकृत ॥

॥ द्वादश स्तोत्राणि॥
अथ प्रथमस्तोत्रम्
वन्दे वन्द्यं सदानन्दं वासुदेवं निरञ्जनम् ।
इन्दिरापतिमाद्यादि वरदेश वरप्रदम् ॥ १॥

नमामि निखिलाधीश किरीटाघृष्टपीठवत् ।
हृत्तमः शमनेऽर्काभं श्रीपतेः पादपङ्कजम् ॥ २॥

जाम्बूनदाम्बराधारं नितम्बं चिन्त्यमीशितुः ।
स्वर्णमञ्जीरसंवीतं आरूढं जगदम्बया ॥ ३॥

उदरं चिन्त्यं ईशस्य तनुत्वेऽपि अखिलम्भरं ।
वलित्रयाङ्कितं नित्यं आरूढं श्रियैकया ॥ ४॥

स्मरणीयमुरो विष्णोः इन्दिरावासमुत्तमैः । var
इन्दिरावासमीशितुः इन्दिरावासमुत्तमम्
अनन्तं अन्तवदिव भुजयोरन्तरङ्गतम् ॥ ५॥

शङ्खचक्रगदापद्मधराश्चिन्त्या हरेर्भुजाः ।
पीनवृत्ता जगद्रक्षा केवलोद्योगिनोऽनिशम् ॥ ६॥

सन्ततं चिन्तयेत्कण्ठं भास्वत्कौस्तुभभासकम् ।
वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः ॥ ७॥

स्मरेत यामिनीनाथ सहस्रामितकान्तिमत् ।
भवतापापनोदीड्यं श्रीपतेः मुखपङ्कजम् ॥ ८॥

पूर्णानन्यसुखोद्भासिं अन्दस्मितमधीशितुः ।
गोविन्दस्य सदा चिन्त्यं नित्यानन्दपदप्रदम् ॥ ९॥

स्मरामि भवसन्ताप हानिदामृतसागरम् ।
पूर्णानन्दस्य रामस्य सानुरागावलोकनम् ॥ १०॥

ध्यायेदजस्रमीशस्य पद्मजादिप्रतीक्षितम् ।
भ्रूभङ्गं पारमेष्ठ्यादि पददायि विमुक्तिदम् ॥ ११॥

सन्ततं चिन्तयेऽनन्तं अन्तकाले var  अन्त्यकाले विशेषतः ।
नैवोदापुः गृणन्तोऽन्तं यद्गुणानां अजादयः ॥ १२॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु प्रथमस्तोत्रं सम्पूर्णम्

अथ द्वितीयस्तोत्रम्
स्वजनोदधिसंवृद्धि पूर्णचन्द्रो गुणार्णवः ।var  सुजनोदधिसंवृद्धि
अमन्दानन्द सान्द्रो नः सदाव्यादिन्दिरापतिः ॥ १॥ var  प्रीयातामिन्दिरापतिः
रमाचकोरीविधवे दुष्टदर्पोदवह्नये (दुष्टसर्पोदवह्नये) ।
सत्पान्थजनगेहाय नमो नारायणाय ते ॥ २॥

चिदचिद्भेदं अखिलं विधायाधाय भुञ्जते ।
अव्याकृतगुहस्थाय रमाप्रणयिने नमः ॥ ३॥

अमन्दगुणसारोऽपि मन्दहासेन वीक्षितः ।
नित्यमिन्दिरयाऽनन्दसान्द्रो यो नौमि तं हरिम् ॥ ४॥

वशी वशो (वशे) न कस्यापि योऽजितो विजिताखिलः ।
सर्वकर्ता न क्रियते तं नमामि रमापतिम् ॥ ५॥

अगुणायगुणोद्रेक स्वरूपायादिकारिणे ।
विदारितारिसङ्घाय वासुदेवाय ते नमः ॥ ६॥

आदिदेवाय देवानां पतये सादितारये ।
अनाद्यज्ञानपाराय नमः पारावराश्रय ॥ ७॥ var  नमो वरवराय ते
अजाय जनयित्रेऽस्य विजिताखिलदानव ।
अजादि पूज्यपादाय नमस्ते गरुडध्वज ॥ ८॥

इन्दिरामन्दसान्द्राग्र्य कटाक्षप्रेक्षितात्मने ।
अस्मदिष्टैक कार्याय पूर्णाय हरये नमः ॥ ९॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु द्वितीयस्तोत्रं सम्पूर्णम्

अथ तृतीयस्तोत्रम्
कुरु भुङ्क्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया सततं ।
हरिरेव परो हरिरेव गुरुः हरिरेव जगत्पितृमातृगतिः ॥ १॥

न ततोऽस्त्यपरं जगदीड्यतमं (जगतीड्यतमं) परमात्परतः पुरुषोत्तमतः ।
तदलं बहुलोकविचिन्तनया प्रवणं कुरु मानसमीशपदे ॥ २॥

यततोऽपि हरेः पदसंस्मरणे सकलं ह्यघमाशु लयं व्रजति ।
स्मरतस्तु विमुक्तिपदं परमं स्फुटमेष्यति तत्किमपाक्रियते ॥ ३॥

शृणुतामलसत्यवचः परमं शपथेरितं उच्छ्रितबाहुयुगं ।
न हरेः परमो न हरेः सदृशः परमः स तु सर्व चिदात्मगणात् ॥ ४॥

यदि नाम परो न भवेत (भवेत्स) हरिः कथमस्य वशे जगदेतदभूत् ।
यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवेत् ॥ ५॥

न च कर्मविमामल कालगुणप्रभृतीशमचित्तनु तद्धि यतः ।
चिदचित्तनु सर्वमसौ तु हरिर्यमयेदिति वैदिकमस्ति वचः ॥ ६॥

व्यवहारभिदाऽपि गुरोर्जगतां न तु चित्तगता स हि चोद्यपरम् ।
बहवः पुरुषाः पुरुषप्रवरो हरिरित्यवदत्स्वयमेव हरिः ॥ ७॥

चतुरानन पूर्वविमुक्तगणा हरिमेत्य तु पूर्ववदेव सदा ।
नियतोच्चविनीचतयैव निजां स्थितिमापुरिति स्म परं वचनम् ॥ ८॥

आनन्दतीर्थसन्नाम्ना पूर्णप्रज्ञाभिधायुजा ।
कृतं हर्यष्टकं भक्त्या पठतः प्रीयते हरिः ॥ ९॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु तृतीयस्तोत्रं सम्पूर्णम्

अथ चतुर्थस्तोत्रम्
निजपूर्णसुखामितबोधतनुः परशक्तिरनन्तगुणः परमः ।
अजरामरणः सकलार्तिहरः कमलापतिरीड्यतमोऽवतु नः ॥ १॥

यदसुप्तिगतोऽपि हरिः सुखवान् सुखरूपिणमाहुरतो निगमाः ।
स्वमतिप्रभवं जगदस्य यतः परबोधतनुं च ततः खपतिम् ॥ २॥  var  सुमतिप्रभवम्
बहुचित्रजगत् बहुधाकरणात्परशक्तिरनन्तगुणः परमः ।
सुखरूपममुष्यपदं परमं स्मरतस्तु भविष्यति तत्सततम् ॥ ३॥

स्मरणे हि परेशितुरस्य विभोर्मलिनानि मनांसि कुतः करणम् ।
विमलं हि पदं परमं स्वरतं तरुणार्कसवर्णमजस्य हरेः ॥ ४॥

विमलैः श्रुतिशाणनिशाततमैः सुमनोऽसिभिराशु निहत्य दृढम् ।
बलिनं निजवैरिणमात्मतमोभिदमीशमनन्तमुपास्व हरिम् ॥ ५॥

न हि विश्वसृजो विभुशम्भुपुरन्दर सूर्यमुखानपरानपरान् ।
सृजतीड्यतमोऽवति हन्ति निजं पदमापयति प्रणतां स्वधिया ॥ ६॥

परमोऽपि रमेशितुरस्य समो न हि कश्चिदभून्न भविष्यति च ।
क्वचिदद्यतनोऽपि न पूर्णसदागणितेड्यगुणानुभवैकतनोः ॥ ७॥

इति देववरस्य हरेः स्तवनं कृतवान् मुनिरुत्तममादरतः ।
सुखतीर्थपदाभिहितः पठतस्तदिदं भवति ध्रुवमुच्चसुखम् ॥ ८॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु चतुर्थस्तोत्रं सम्पूर्णम्

अथ पञ्चमस्तोत्रम्
वासुदेवापरिमेयसुधामन् शुद्धसदोदित सुन्दरीकान्त ।
धराधरधारण वेधुरधर्तः सौधृतिदीधितिवेधृविधातः ॥ १॥

अधिकबन्धं रन्धय बोधा च्छिन्धिपिधानं बन्धुरमद्धा ।
केशव केशव शासक वन्दे पाशधरार्चित शूरपरेश (शूरवरेश) ॥ २॥

नारायणामलतारण (कारण) वन्दे कारणकारण पूर्ण वरेण्य ।
माधव माधव साधक वन्दे बाधक बोधक शुद्ध समाधे ॥ ३॥

गोविन्द गोविन्द पुरन्दर वन्दे स्कन्द सनन्दन वन्दित पाद ।
विष्णु सृजिष्णु ग्रसिष्णु विवन्दे कृष्ण सदुष्ण वधिष्ण सुधृष्णो ॥ ४॥

var विष्णो सृजिष्णो ग्रसिष्णो विवन्दे कृष्ण सदुष्णवधिष्णो सुधृष्णो
मधुसूदन दानवसादन वन्दे दैवतमोदन (दैवतमोदित) वेदित पाद ।
त्रिविक्रम निष्क्रम विक्रम वन्दे सुक्रम सङ्क्रमहुङ्कृतवक्त्र ॥ ५॥ var सङ्क्रम सुक्रम हुङ्कृतवक्त्र
वामन वामन भामन वन्दे सामन सीमन सामन सानो ।
श्रीधर श्रीधर शंधर वन्दे भूधर वार्धर कन्धरधारिन् ॥ ६॥

हृषीकेश सुकेश परेश विवन्दे शरणेश कलेश बलेश सुखेश ।
पद्मनाभ शुभोद्भव वन्दे सम्भृतलोकभराभर भूरे ।
दामोदर दूरतरान्तर वन्दे दारितपारक पार (दारितपारगपार) परस्मात् ॥ ७॥

आनन्दसुतीर्थ मुनीन्द्रकृता हरिगीतिरियं परमादरतः ।
परलोकविलोकन सूर्यनिभा हरिभक्ति विवर्धन शौण्डतमा ॥ ८॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु पञ्चमस्तोत्रं सम्पूर्णम्

अथ षष्ठस्तोत्रम्
मत्स्यकरूप लयोदविहारिन् वेदविनेत्र चतुर्मुखवन्द्य ।
कूर्मस्वरूपक मन्दरधारिन् लोकविधारक देववरेण्य ॥ १॥

सूकररूपक दानवशत्रो भूमिविधारक यज्ञावराङ्ग ।
देव नृसिंह हिरण्यकशत्रो सर्व भयान्तक दैवतबन्धो ॥ २॥

वामन वामन माणववेष दैत्यवरान्तक कारणरूप ।
राम भृगूद्वह सूर्जितदीप्ते क्षत्रकुलान्तक शम्भुवरेण्य ॥ ३॥

राघव राघव राक्षस शत्रो मारुतिवल्लभ जानकिकान्त ।
देवकिनन्दन नन्दकुमार वृन्दावनाञ्चन गोकुलचन्द्र ॥ ४॥

कन्दफलाशन सुन्दररूप नन्दितगोकुलवन्दितपाद ।
इन्द्रसुतावक नन्दकहस्त चन्दनचर्चित सुन्दरिनाथ ॥ ५॥

इन्दीवरोदर दळनयन मन्दरधारिन् गोविन्द वन्दे ।
चन्द्रशतानन कुन्दसुहास नन्दितदैवतानन्दसुपूर्ण ॥ ६॥

देवकिनन्दन सुन्दररूप रुक्मिणिवल्लभ पाण्डवबन्धो ।
दैत्यविमोहक नित्यसुखादे देवविबोधक बुद्धस्वरूप ॥ ७॥

दुष्टकुलान्तक कल्किस्वरूप धर्मविवर्धन मूलयुगादे ।
नारायणामलकारणमूर्ते पूर्णगुणार्णव नित्यसुबोध ॥ ८॥

आनन्दतीर्थकृता हरिगाथा पापहरा शुभनित्यसुखार्था ॥ ९॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु षष्ठस्तोत्रं सम्पूर्णम्

अथ सप्तमस्तोत्रम्
विश्वस्थितिप्रळयसर्गमहाविभूति वृत्तिप्रकाशनियमावृति बन्धमोक्षाः ।
यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीः यत्कटाक्षबलवत्यजितं नमामि ॥ १॥

ब्रह्मेशशक्ररविधर्मशशाङ्कपूर्व गीर्वाणसन्ततिरियं यदपाङ्गलेशम् ।
आश्रित्य विश्वविजयं विसृजत्यचिन्त्या श्रीः यत्कटाक्षबलवत्यजितं नमामि ॥ २॥

धर्मार्थकामसुमतिप्रचयाद्यशेषसन्मङ्गलं विदधते यदपाङ्गलेशम् ।
आश्रित्य तत्प्रणतसत्प्रणता अपीड्या श्रीः यत्कटाक्षबलवति अजितं नमामि ॥ ३॥

षड्वर्गनिग्रहनिरस्तसमस्तदोषा ध्यायन्ति विष्णुमृषयो यदपाङ्गलेशम् ।
आश्रित्य यानपि समेत्य न याति दुःखं श्रीः यत्कटाक्षबलवति अजितं नमामि ॥ ४॥

शेषाहिवैरिशिवशक्रमनुप्रधान चित्रोरुकर्मरचनं यदपाङ्गलेशम् ।
आश्रित्य विश्वमखिलं विदधाति धाता श्रीः यत्कटाक्षबलवति अजितं नमामि ॥ ५॥

शक्रोग्रदीधितिहिमाकरसूर्यसूनु पूर्वं निहत्य निखिलं यदपाङ्गलेशम् ।
आश्रित्य नृत्यति शिवः प्रकटोरुशक्तिः श्रीः यत्कटाक्ष बलवति अजितं नमामि ॥ ६॥

तत्पादपङ्कजमहासनतामवाप शर्वादिवन्द्यचरणो यदपाङ्गलेशम् ।
आश्रित्य नागपतिः अन्यसुरैर्दुरापां श्रीः यत्कटाक्षबलवति अजितं नमामि ॥ ७॥

नागारिरुग्रबलपौरुष आप विष्णुवाहत्वमुत्तमजवो यदपाङ्गलेशम् । var
विष्णोर्वाह
आश्रित्य शक्रमुखदेवगणैः अचिन्त्यं श्रीः यत्कटाक्ष बलवति अजितं नमामि ॥ ८॥

आनन्दतीर्थमुनिसन्मुखपंकजोत्थं साक्षाद्रमाहरिमनः प्रियं उत्तमार्थम् ।
भक्त्या पठति अजितमात्मनि सन्निधाय यः स्तोत्रमेतभियाति तयोरभीष्टम् ॥ ९॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु सप्तमस्तोत्रं सम्पूर्णम्

अथ अष्टमस्तोत्रम्
वन्दिताशेषवन्द्योरुवृन्दारकं चन्दनाचर्चितोदारपीनांसकम् ।
इन्दिराचञ्चलापाङ्गनीराजितं मन्दरोद्धारिवृत्तोद्भुजाभोगिनम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ १॥

सृष्टिसंहारलीलाविलासाततं पुष्टषाड्गुण्यसद्विग्रहोल्लासिनम् ।
दुष्टनिःशेषसंहारकर्मोद्यतं हृष्टपुष्टातिशिष्ट (अनुशिष्ट) प्रजासंश्रयम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ २॥

उन्नतप्रार्थिताशेषसंसाधकं सन्नतालौकिकानन्ददश्रीपदम् ।
भिन्नकर्माशयप्राणिसम्प्रेरकं तन्न किं नेति विद्वत्सु मीमांसितम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ ३॥

विप्रमुख्यैः सदा वेदवादोन्मुखैः सुप्रतापैः क्षितीशेश्वरैश्चार्च्चितम् ।
अप्रतर्क्योरुसंविद्गुणं निर्मलं सप्रकाशाजरानन्दरूपं परम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ ४॥

अत्ययो यस्य (येन) केनापि न क्वापि हि प्रत्ययो यद्गुणेषूत्तमानां परः ।
सत्यसङ्कल्प एको वरेण्यो वशी मत्यनूनैः सदा वेदवादोदितः ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ ५॥

पश्यतां दुःखसन्ताननिर्मूलनं दृश्यतां दृश्यतामित्यजेशार्चितम् ।
नश्यतां दूरगं सर्वदाप्याऽत्मगं वश्यतां स्वेच्छया सज्जनेष्वागतम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ ६॥

अग्रजं यः ससर्जाजमग्र्याकृतिं विग्रहो यस्य सर्वे गुणा एव हि ।
उग्र आद्योऽपि यस्यात्मजाग्र्यात्मजः सद्गृहीतः सदा यः परं दैवतम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ ७॥

अच्युतो यो गुणैर्नित्यमेवाखिलैः प्रच्युतोऽशेषदोषैः सदा पूर्तितः ।
उच्यते सर्ववेदोरुवादैरजः स्वर्चितो ब्रह्मरुद्रेन्द्रपूर्वैः सदा ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ ८॥

धार्यते येन विश्वं सदाजादिकं वार्यतेऽशेषदुःखं निजध्यायिनाम् ।
पार्यते सर्वमन्यैर्नयत्पार्यते कार्यते चाखिलं सर्वभूतैः सदा ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ ९॥

सर्वपापानियत्संस्मृतेः सङ्क्षयं सर्वदा यान्ति भक्त्या विशुद्धात्मनाम् ।
शर्वगुर्वादिगीर्वाण संस्थानदः कुर्वते कर्म यत्प्रीतये सज्जनाः ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ १०॥

अक्षयं कर्म यस्मिन् परे स्वर्पितं प्रक्षयं यान्ति दुःखानि यन्नामतः ।
अक्षरो योऽजरः सर्वदैवामृतः कुक्षिगं यस्य विश्वं सदाऽजादिकम् ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ ११॥

नन्दितीर्थोरुसन्नामिनो नन्दिनः सन्दधानाः सदानन्ददेवे मतिम् ।
मन्दहासारुणा पाङ्गदत्तोन्नतिं वन्दिताशेषदेवादिवृन्दं सदा ।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनं प्रीणयामो वासुदेवम् ॥ १२॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु अष्टमस्तोत्रं सम्पूर्णम्

अथ नवमस्तोत्रम्
अतिमततमोगिरिसमितिविभेदन पितामहभूतिद गुणगणनिलय ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ १॥

विधिभवमुखसुरसततसुवन्दितरमामनोवल्लभ भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ २॥

अगणितगुणगणमयशरीर हे विगतगुणेतर भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ ३॥

अपरिमितसुखनिधिविमलसुदेह हे विगत सुखेतर भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ ४॥

प्रचलितलयजलविहरण शाश्वतसुखमयमीन हे भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ ५॥

सुरदितिजसुबलविलुळितमन्दरधर पर कूर्म हे भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ ६॥

सगिरिवरधरातळवह सुसूकरपरमविबोध हे भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ ७॥

अतिबलदितिसुत हृदय विभेदन जयनृहरेऽमल भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ ८॥

बलिमुखदितिसुतविजयविनाशन जगदवनाजित भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ ९॥

अविजितकुनृपतिसमितिविखण्डन रमावर वीरप भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ १०॥

खरतरनिशिचरदहन परामृत रघुवर मानद भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ ११॥

सुललिततनुवर वरद महाबल यदुवर पार्थप भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ १२॥

दितिसुतविमोहन विमलविबोधन परगुणबुद्ध हे भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ १३॥

कलिमलहुतवह सुभग महोत्सव शरणद कल्कीश भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ १४॥

अखिलजनिविलय परसुखकारण परपुरुषोत्तम भव मम शरणम् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ १५॥

इति तव नुतिवरसततरतेर्भव सुशरणमुरुसुखतीर्थमुनेः भगवन् ।
शुभतम कथाशय परमसदोदित जगदेककारण रामरमारमण ॥ १६॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु नवमस्तोत्रं सम्पूर्णम्

अथ दशमस्तोत्रम्
अव नः श्रीपतिरप्रतिरधिकेशादिभवादे ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ १॥

सुरवन्द्याधिप सद्वरभरिताशेषगुणालम् ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ २॥

सकलध्वान्तविनाशन (विनाशक) परमानन्दसुधाहो ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ ३॥

त्रिजगत्पोत सदार्चितचरणाशापतिधातो ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ ४॥

त्रिगुणातीतविधारक परितो देहि सुभक्तिम् ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ ५॥

शरणं कारणभावन भव मे तात सदाऽलम् ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ ६॥

मरणप्राणद पालक जगदीशाव सुभक्तिम् ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ ७॥

तरुणादित्यसवर्णकचरणाब्जामल कीर्ते ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ ८॥

सलिलप्रोत्थसरागकमणिवर्णोच्चनखादे ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ ९॥

कज (खज) तूणीनिभपावनवरजङ्घामितशक्ते ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ १०॥

इबहस्तप्रभशोभनपरमोरुस्थरमाळे ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ ११॥

असनोत्फुल्लसुपुष्पकसमवर्णावरणान्ते ।

करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ १२॥

शतमोदोद्भवसुन्दरिवरपद्मोत्थितनाभे ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ १३॥

जगदागूहकपल्लवसमकुक्षे शरणादे ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ १४॥

जगदम्बामलसुन्दरिगृहवक्षोवर योगिन् ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ १५॥

दितिजान्तप्रद चक्रधरगदायुग्वरबाहो ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ १६॥

परमज्ञानमहानिधिवदन श्रीरमणेन्दो ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ १७॥

निखिलाघौघविनाशन (विनाशक) परसौख्यप्रददृष्टे ।
करुणापूर्णवरप्रदचरितं ज्ञापय मे ते ॥ १८॥

परमानन्दसुतीर्थसुमुनिराजो हरिगाथाम् ।
कृतवान्नित्यसुपूर्णकपरमानन्दपदैषिन् ॥ १९॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु दशमस्तोत्रं सम्पूर्णम्

अथ एकादशस्तोत्रम्
उदीर्णमजरं दिव्यं अमृतस्यन्द्यधीशितुः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्रादि अभिवन्दितम् ॥ १॥

सर्ववेदपदोद्गीतं इन्दिरावासमुत्तमम् (इन्दिराधारमुत्तमम्) ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्रादि अभिवन्दितम् ॥ २॥

सर्वदेवादिदेवस्य विदारितमहत्तमः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्रादि अभिवन्दितम् ॥ ३॥

उदारमादरान्नित्यं अनिन्द्यं सुन्दरीपतेः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्रादि अभिवन्दितम् ॥ ४॥

इन्दीवरोदरनिभं सुपूर्णं वादिमोहनम् (वादिमोहदम्) ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्रादि अभिवन्दितम् ॥ ५॥

दातृसर्वामरैश्वर्यविमुक्त्यादेरहो परम् (वरम्) ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्रादि अभिवन्दितम् ॥ ६॥

दूराद्दुरतरं यत्तु तदेवान्तिकमन्तिकात् ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्रादि अभिवन्दितम् ॥ ७॥

पूर्णसर्वगुणैकार्णमनाद्यन्तं सुरेशितुः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्रादि अभिवन्दितम् ॥ ८॥

आनन्दतीर्थमुनिना हरेरानन्दरूपिणः ।
कृतं स्तोत्रमिदं पुण्यं पठन्नानन्दमाप्नुयात् ॥ ९॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु एकादशस्तोत्रं सम्पूर्णम्

अथ द्वादशस्तोत्रम्
आनन्दमुकुन्द अरविन्दनयन ।
आनन्दतीर्थ परानन्दवरद ॥ १॥

सुन्दरीमन्दिरगोविन्द वन्दे ।
आनन्दतीर्थ परानन्दवरद ॥ २॥

चन्द्रकमन्दिरनन्दक वन्दे ।
आनन्दतीर्थ परानन्दवरद ॥ ३॥

चन्द्रसुरेन्द्रसुवन्दित वन्दे ।
आनन्दतीर्थ परानन्दवरद ॥ ४॥

मन्दारसूनसुचर्चित वन्दे ।
आनन्दतीर्थ परानन्दवरद ॥ ५॥

वृन्दारवृन्दसुवन्दित वन्दे (वृन्दारकवृन्दसुवन्दित वन्दे) ।
आनन्दतीर्थ परानन्दवरद ॥ ६॥

इन्दिराऽनन्दक सुन्दर वन्दे ।
आनन्दतीर्थ परानन्दवरद ॥ ७॥

मन्दिरस्यन्दनस्यन्दक वन्दे ।
आनन्दतीर्थ परानन्दवरद ॥ ८॥

आनन्दचन्द्रिकास्यन्दक वन्दे ।
आनन्दतीर्थ परानन्दवरद ॥ ९॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितं
द्वादशस्तोत्रेषु द्वादशं स्तोत्रं सम्पूर्णम्
॥ भारतीरमणमुख्यप्राणान्तर्गत श्रीकृष्णार्पणमस्तु॥